त्तासंबंधेनव्याप्तिविशिष्टपक्षधर्मताज्ञानंपरामर्शइत्यर्थः घटादिज्ञानवारणायपक्षधर्मेतेति धूमवान्पर्वतइत्यादिज्ञा नवारणायव्याप्तिविशिष्टेति ४५

तज्जन्यंपर्वतोवन्हिमानिति ज्ञानमनुमि तिः यत्रयत्रधूमस्तत्राग्निरिति साहचर्य नियमोव्याप्तिः॥ ४६॥

टी॰ उस्सेउत्पन्नपर्वतवन्हिवालाहै ऐसाज्ञानसोअनुमिति कहातीहै जहां२ धूमहै तहां२ अग्निहै इसतरहपरसहचा रभावकानियमहैसोव्याप्तीकहातीहै ४६

टी॰ तदितिपरामर्शजन्यमित्यर्थः यत्रयत्र धूमेतियत्रयत्र धूमस्तत्रतत्राग्निरितिव्याप्तिरभिनयः तत्रसाहचर्यनिय मइतिलक्षणंसहचरतीतिसहचरस्तस्यभावः साहचर्यं सामानाधिकरण्यमितियावत्तस्यनियमोव्याप्तिरित्यर्थः सचाव्यभिचरितत्वंतच्चव्यभिचाराभावः व्यभिचारश्चसा ध्याभाववद्वृत्तित्वंतथाचसाध्याभाववदवृत्तित्वंव्याप्तिरि तिपर्यवसन्नंवन्हिमान् धूमादित्यादौसाध्योवह्निस्तदभा ववान् जलह्रदादिस्तद्वृत्तित्वंनोकदावद्वृत्तित्वप्रकृतहेतु भूतेधूमेइतिकृत्वालक्षणसमन्वयः धूमवान्वन्हेरित्या दौसाध्योधूमस्तदभाववदयोगोलकंतद्वृत्तित्वमेववह्न्यादा वितिनातिव्याप्तिः ननुज्ञातेयंव्याप्तिः पक्षधर्मताज्ञानमि त्यत्रकानामपक्षधर्मताइत्यपेक्षमाणंप्रतितत्स्वरूपंनिरू पयति ४६॥

व्याप्यस्यपर्वतादिवृत्तित्वंपक्षधर्मता ४७

टी॰ व्याप्यजोधूमादिउनकापर्वतादिकोमैंरहनापक्षधर्मता कहातीहै अग्नीधूमकोछोड़के अधिकदेशमैंरहनेसैं व्यापक

कहाताहैं औरव्यापकसेंहीसाध्यकहतेहैं औरअग्निको छोड़कर धूम अधिकदूसरीजगह नहीं रहताहै किन्तुअग्नि की अपेक्षासें न्यूनजगह रहताहै इसीसें व्याप्य कहाताहै और उसी सें साधन कहतेहैं ४७

टी० व्याप्यस्येति व्याप्योनाम व्याप्त्याश्रयः सच धूमादिरेवत स्यपर्वतादिनिरूपितत्वंनिर्त्वंपक्षधर्मतेत्यर्थः अथ कथमनुमानमनुमितिकरणं कथंवातस्मादनुमितेर्जनिरितिजिज्ञासमानंप्रतिलाघवादनुमानंविभागमुखेनैवात्वबोधयितुमनुमानंविभजते ४७

अनुमानंद्विविधंस्वार्थं परार्थंच स्वार्थं स्वानुमितिहेतुः तथाहि स्वयमेवभूयो भूयोदर्शनेनयत्रयत्र धूमस्तत्राग्निरिति ४८

टी० अनुमानप्रमाणदोप्रकारकाहै एकस्वार्थदूसरापरार्थ अपनेलियेंजो अनुमितीज्ञानउसकाहेतुहै सोस्वार्थ कहाताहै जैसें प्रसिद्ध है कि आपहीसें आपवारवार देखनेसेजहां२ धूमहै तहां२ अग्निहै इसतरह परसोंई केस्थानादिकमें व्याप्तिनिश्चयकरकोई तरहसें पर्वतकेसमीपप्राप्तहो पर्वत में अग्निहै किनहीं ऐसे संदेह कोकरना हुआ पर्वत में धूमको देखकर व्याप्तिकास्मरणकरताहै किजहांपरधूम होताहै वहीं पर अग्निजरूर होतीहै ॥ ४८ ॥

टी० अनुमानमितिद्वैविध्यंदर्शयति स्वार्थंपरार्थंचेतिस्वस्यार्थः प्रयोजनंयस्मात् तत्स्वार्थमितिसमासः स्वप्रयोजनंचस्वस्यानुमेयप्रतिपत्तिः एवंपरार्थमित्यस्यापि ४८॥

महानसादौव्याप्तिंगृहीत्वापर्वतसमीपंगत्वा तद्गतेचाग्नौसंदिहानः पर्वतेधूमं पश्यन् व्याप्तिं स्मरति यत्रधूमस्तत्राग्निरितितदनंतरं वन्हि

व्याप्यधूमवानयंपर्वतइति ज्ञानमुत्प
द्यते अयमेवलिङ्गपरामर्श इत्युच्यते
तस्मात्पर्वतोवह्निमानिति ज्ञानमनुमि
तिरुत्पद्यते तदेतत्स्वार्थानुमानं ४९

टी॰ तिसपीछे वन्हिका व्याप्य जो धूम उसवाला यह पर्वत है इसतर
हका ज्ञान होता है इसी ज्ञानसे लिंगपरामर्श कहते हैं इसलिये पर्वत
अग्निवाला है ऐसा अनुमिति रूपज्ञान इसी परामर्शज्ञानसें उत्प
न्न होता है सो स्वार्थानुमान कहाता है ४९

टी॰ अयमितिव्याप्तिवलेनलीनमर्थं गमयतीति लिंगं तच्च धू
मादिस्तस्यपरामर्शो ज्ञानविशेषइत्यर्थः तस्मादिति लिंगपरा
मर्शादित्यर्थः स्वार्थानुमानमुपसंहरति तदेतदिति यस्मादिदं
स्वप्रतिपत्तिहेतुस्तस्मादेतत्स्वार्थानुमानमित्यर्थः ॥ ४९॥

यत्तु स्वयंधूमादग्निमनुमाय परंप्रतिबोध
यितुं पञ्चावयववाक्यंप्रयुंक्ते तत्परार्थानुमा[नं]

टी॰ और जो कि आप धूमरूपहेतुसें अग्निका अनुमानकर दूस
रेके बोधके लियेपांच अवयवयुक्तवाक्य कहाजाता है सो परार्थानु
मान कहलाता है ५०॥

टी॰ क्रमप्राप्तंपरार्थानुमानमाह यत्त्विति यत्पंचावयववाक्यंतत्प
रार्थानुमानमितिसंबंधः अथावयवत्वंनामद्रव्यसमवायिका
रणंप्रतिज्ञादिषुतदसंभवात्कथमेतेऽवयवाः स्युरिति चेन्नद[नु]
मानवाक्यैकदेशत्वादवयवाइत्युपचर्यते इतिगृहाण नन्वे
वमपिपंचावयववाक्यस्यानुमानत्वमेवनविचारसहं तस्य
लिंगपरामर्शत्वाभावादिति चेन्नैवंलिंगपरामर्शप्रयोजकलिं
गप्रतिपादकत्वेनानुमानमित्युपचारमात्रत्वात् ५०

यथापर्वतो वह्निमान् धूमवत्त्वात् यो यो

धूमवान्सस्सवन्हिमान् यथामहानसं तथाचायंतस्मात्तथेति अनेनप्रतिपादि तााल्लिंगात्परोप्यग्निंप्रतिपद्यते ५१

टी॰ जैसेकिपर्वतअग्निवालाहे धूमवालाहोनेसे क्योंकिजो२ धूमवालाहोताहे सोसोअग्निवालाहोताहे जैसेरसोंईआदि कास्थानहे तैसाही यह पर्वतहे इसलिये यह पर्वततैसाहे अर्थात् धूमवालाहोनेसे अग्नि वन्हिवालाहे इसपंचअव यवसंबंध सेयुक्तकहेहुयेवाक्य रूपअनुमानसे दूसरेपु रुषकोअग्निजनायसकतेहैं ५१

टी॰ तदुदाहरति यथेति तथाचायमिति अयंचपर्वतस्तथा वन्हिव्याप्यधूमवानित्यर्थः तस्मात्तथेतिवन्हिव्याप्यधूमव त्वात् वन्हिमानित्यर्थः अनेनेति अनेनपंचावयववाक्ये ने त्यर्थः ॥ ५१ ॥

प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः पर्वतोवन्हिमानिति प्रतिज्ञा धूमवत्वादितिहेतुः योयोधूमवानित्युदा हरणं तथाचायमित्युपनयः तस्मात्तथेति निगमनं ५२॥

टी॰ प्रतिज्ञाहेतुउदाहरणउपनयनिगमनये पाँचोअवयवक हतेहैं पर्वतअग्निवालाहे यहप्रतिज्ञाकहातीहे धूमवाला होनेसे यहहेतुकहाताहे जोजोधूमवालाहे सोसोअग्निवाला है यहउदाहरणकहलाताहे तैसायहपर्वतहे यहउपनय कहाताहे इसलियेयह पर्वत तैसाहे अर्थात् धूमवालाहो नेसेअग्निवालाहे यहनिगमनकहलाताहे ५२

टी॰ ननुपंचावयववाक्यमित्यत्रकेतेपंचावयवाःअतस्तान्

र्शयति प्रतिज्ञेति प्रतिज्ञाद्यन्यतमत्वमवयवत्वं साध्यविशिष्टप क्षबोधकवचनं प्रतिज्ञा पंचम्यंतं तृतीयांतं वा लिंगवचनं हेतुः व्याप्तिप्रतिपादकदृष्टांतवचनमुदाहरणमुदाहृतव्याप्तिविशिष्ट त्वेन हेतोः पक्षधर्मता प्रतिपादकवचनमुपनयः पक्षे साध्य स्याबाधितत्व प्रतिपादकवचनं निगमनं इदमेव लक्षणं हृ दि निधाय प्रतिज्ञादीन्विशिष्य दर्शयति पर्वतो वन्हिमानित्यादिना ५२

स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गप रामर्श एव कारणम् तस्माल्लिंगपराम र्शोनुमानं लिंगं त्रिविधम् अन्वयव्यति रेकि केवलान्वयि केवलव्यतिरेकिचेति

टी० स्वार्थ अनुमिति और परार्थ अनुमिति में लिंगपरामर्शही का रण होता है इसलिये लिंगपरामर्श अनुमान कहाता है लिंगपरा मर्शका स्वरूप पहिले कह आये हैं लिंग तीन प्रकार का होता है अन्वयवितरेकी १ केवलान्वयी २ केवलव्यतिरेकी ३ ॥ ५३

टी० लिंगेति ज्ञायमानं लिंगमनुमितिकरणमिति न वृद्धोक्तयु क्तमिमं यज्ञशाला वन्हिमती अतीत धूमादित्यादौ लिंगाभावे प्यनुमितिदर्शनादित्यभिप्रायवांल्लिंगपरामर्शमित्याचष्टे लिं गपरामर्श एवेति अनुमानमुपसंहरति तस्मादिति अनुमि तिकरणत्वादित्यर्थः अयमेव तृतीयज्ञानमुच्यते तथाहि म हानसादौ धूमाग्न्योर्व्याप्तौ गृह्यमाणायां यद्धूमज्ञानं तदादि सं पक्षे यद्धूमज्ञानं तत् द्वितीयं अत्रैव वन्हिव्याप्यत्वेन यत् धू मज्ञानं तत्तृतीयं इदमेव लिंगपरामर्श इत्युच्यते अनुमानमि ति व्यापारवत्कारणं करणमिति मते व्याप्तिरेवानुमानं लिंगप रामर्शो व्यापार इत्यवसेयम् ॥ ५३ ॥ ॥

अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वय

व्यतिरेकि यथा बन्हौ साध्ये धूमवत्वम् यत्र धूमस्तत्राग्निर्यथा महानसमित्यन्वयव्याप्तिः यत्र वन्हि र्नास्ति तत्र धूमोपि नास्ति यथा महाह्रद इति व्यतिरेकव्याप्तिः ५४

टी० अन्वयऔर व्यतिरेकसें व्याप्तिवाला हेतु अन्वयव्यतिरेकी होताहै जैसें अग्निरूपसाध्य होनेपर धूमहेतु होताहै जहां२ धूमहोताहै वहां२ अग्निहै जैसे रसोंई आदिकास्थानहै यह अन्वयव्याप्तिकहलातीहै जहांपर अग्निनहीहै वहांपर धूम भीनहीहै जैसें जलकीदहार यह व्यतिरेकव्याप्तिकहातीहै ५४

टी० अन्वयव्यतिरेकिणोलक्षणमाह अन्वयेति तृतीयायाः प्रयोज्यत्वमर्थः साध्यसाधनयोः साहचर्यमन्वयः तदभावयोः साहचर्यंव्यतिरेकः तथाचान्वयप्रयोज्यव्याप्तिमद्व्यतिरेकप्रयोज्यव्याप्तिमदन्वयव्यतिरेकीत्यर्थः केवलव्यतिरेकिण्यतिव्याप्तिवारणायान्वयेनेति केवलान्वयिनि व्यभिचारवारणाय व्यतिरेकेणेति तथाचान्वयव्याप्तिरूपदर्शिनेव व्यतिरेकव्याप्तिश्च साध्याऽभावव्यापकीभूताभावप्रतियोगित्वमित्यर्थः तदुक्तं व्याप्यव्यापकभावोहि भावयोर्यादृगिष्यते तयोरभावयोस्तस्माद्विपरीतः प्रतीयते अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते साध्याभावोन्यथाव्याप्यो व्यापकः साधनात्यय इति ॥ ५४ ॥

अन्वयमात्रव्याप्तिकं केवलान्वयि यथा घटोभिधेयः प्रमेयत्वात्पटवत् अत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति सर्वस्य प्रमेयत्वादभिधेयत्वाच्च ॥ ५५

टी० अन्वयमात्रसें व्याप्तिवाला केवलान्वयीकहलाताहै

जैसे घट अभिधेय अर्थात् अभिधाक है शब्दशक्तिका विषय है प्रमेय अर्थात् प्रमारूप ज्ञानका विषय होनेसे पटकी नाई यहांपर प्रमेयत्व और अभिधेयत्व इनदोनोंकी व्यतिरेकव्याप्ति नहीं है क्योंकि सब वस्तुमात्रको प्रमेय और अभिधेयरूप होनेसे व्यतिरेकमें दृष्टान्त नहीं मिलता है ५५

टी० केवलान्वयिनो लक्षणमाह अन्वयेति अन्वयेनैवव्याप्तिर्यस्मिन्सतथाप्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिं निराकरोति अत्रेति अभिधेयत्वसाध्यकानुमान इत्यर्थः ननुकुतस्तन्निषेधोतनस्तत्रहेतुमाह सर्वस्येति सर्वस्येति पदार्थमात्रस्येत्यर्थः तथाच सकलपदाभिधेयत्वस्येश्वरप्रमाविषयत्वस्य चात्यंताभावाप्रतियोगित्वरूपकेवलान्वयित्वेन तदभावाप्रसिद्धानतद्घटितव्यतिरेकिव्याप्तिर्नसंभवत्येवेतिभावः ५५

व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि
यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्वात्
यदितरेभ्यो न भिद्यते न तद्गन्धवत् यथा
जलम् नचेयं तथा तस्मान्न तथेति ५६

टी० और व्यतिरेकमात्रसे व्याप्तिवाला हेतु केवलव्यतिरेकी कहलाता है जैसे पृथ्वी इतर पदार्थोंसे भिन्न है गंधवाली होनेसें जो इतरपदार्थोंसे भिन्न नहीं है सो गंधवाला भी नहीं है जैसें जल है यह पृथ्वी नौ तैसा अर्थात् गंधके अभाववाला नहोनेसे इतरपदार्थ जलादिसें भिन्न है अभावसें व्यतिरेक ॥ ५६ कहते हैं यहांपर जो गंधवाला है सो इतरसे भिन्न हैं

टी० केवलव्यतिरेकिणो लक्षणमाह व्यतिरेकेति व्यतिरेकेणेव व्याप्तिर्यस्मिन्सतथा अन्वयव्यतिरेकिण्यतिव्याप्तिवा

रणायमात्रेति नचेयंतथेतिइयंचपृथिवीनतथानगंधा
भाववतीत्यर्थः तस्मान्नतथेति गंधाभाववत्त्वाभावादि
तरभेदाभाववतीनेत्यर्थः ५६

अत्र यद्गन्धवत्तदितरभिन्नमित्यन्वयदृष्टा
न्तोनास्ति पृथिवी मात्रस्य पक्षत्वात् ५७

टी० इहांपरजोगंधवालीहै वहपृथवीसेंभिन्नहैइसप्रकार
के अन्वयमेंअमुकेकीतरह इसप्रकारका दृष्टान्तनहीहै
क्योंकि सबपृथ्वीमात्रहीपक्षहै ५७

टी० नन्वत्रकिमितिनान्वयव्याप्तिरित्याशंकापरिहरतिअ
त्रेति इतरभेदसाधकानुमानइत्यर्थः इदमुपलक्षणंजी
वत् शरीरंसात्मकंप्राणादिमत्वात् यन्नैवंतन्नैवंयथाघटः
प्रत्यक्षादिकंप्रमाणमितिव्यवहर्तव्यंप्रमाकरणत्वात् य
न्नैवंतन्नैवंयथाप्रत्यक्षाभासः विवादास्पदमाकाशमि
तिव्यवहर्तव्यंशब्दवत्वादित्यादिकमपिकेवलव्यतिरे
कीतिद्रष्टव्यं अथपृथिवीमात्रस्यपक्षत्वादित्यत्रकिंनाम
पक्षत्वमित्यपेक्षायांतंनिर्वक्ति ५७

सन्दिग्धसाध्यवान्पक्षः यथा धूमवत्त्वे
हेतौपर्वतः निश्चितसाध्यवान्सपक्षः य
था तत्रैव महानसः निश्चितसाध्याभाववा
न्विपक्षः यथा तत्रैवमहाह्रदः ॥ ५८।

टी० संशययुक्तसाध्यवालापक्षकहलाताहै जैसेधूमरू
पहेतुहोनेपरयह पर्वतहै औरसाध्यकेनिश्चेवालासप
क्षकहलाताहै जैसेवहीधूमहेतुहोनेपररसोंईआदिका
स्थानहै दृष्टान्तसेसपक्षकहतेहैं निश्चेकरसाध्यके अभा
ववाला विपक्ष कहलाताहै जैसेउसीधूमकोहेतुहोनेपरजलकी

टी॰ संदिग्धेति सपक्षवारणाय संदिग्धेति निश्चितेति पक्षे तिव्याप्तिवारणाय निश्चितेति तत्रैवेति धूमवत्त्वे हेतावित्यर्थः साध्येति सपक्षेतिव्याप्तिवारणाय साध्येति पक्षेतिव्याप्तिवारणाय निश्चितेति अत्रेदं बोध्यं अन्वयव्यतिरेकि तु पंचरूपोपपन्नं स्वसाध्यं साधयितुं क्षमते तानि कानीति चेत् श्रूयतां पक्षधर्मत्वं सपक्षे सत्त्वं विपक्षाद्व्यावृत्तिः अबाधितविषयत्वं असत्प्रतिपक्षत्वं चेति अबाधितः साध्यरूपो विषयो यस्य तत्तथोक्तं तस्य भावस्तत्त्वं एवं साध्याभावसाधकं हेत्वंतरं यस्य स सत्प्रतिपक्ष इत्युच्यते स नास्ति यस्य सोऽसत्प्रतिपक्षस्तस्य भावस्तत्त्वमिति बोध्यं केवलान्वयि तु चतूरूपोपपन्नमेव स्वसाध्यं साधयितुं क्षमते तस्य विपक्षविपर्ययेण तद्व्यावृत्तिविपर्ययात् केवलव्यतिरेक्यपि तथा तस्य सपक्षविपर्ययेण तत्सपक्षत्वविपर्ययादिति हेतुनिरूप्य हेत्वाभासानाह ५८

सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्चहेत्वाभासाः सव्यभिचारोनैकान्तिकः सत्रिविधः साधारणासाधारणानुपसंहारिभेदात् ५९

टी॰ सव्यभिचार १ विरुद्ध २ सत्प्रतिपक्ष ३ असिद्ध ४ बाधित ५ यह पांचों हेत्वाभास कहलाते हैं अनैकान्तिक सैं व्यभिचारक ५९ हते हैं सो तीन भांति का है साधारण १ असाधारण २ अनुपसंहारी ३

टी॰ सव्यभिचारेति उपदर्शितरूपाणां मध्ये कतिपयरूपोपपन्नत्वाद्धेतुवदाभासंते इति हेत्वाभासः तत्त्वं चानुमितितत्करणान्यतरप्रतिबंधकयथार्थज्ञानविषयत्वं बाधस्थले वह्निरनुष्ण इत्यनुमितिप्रतिबंधकं यत् ज्ञानसुष्णत्ववद्

न्हावत्नुष्मत्वसाधकंद्रव्यत्वमित्याकारकं नह्विषयत्वस्यवि षयतासंबंधेनद्रव्य त्वरूपहेत्वाभासेसत्वाल्लक्षणसमन्व यः सद्धेतुवारणाययथार्थेति घटादिवारणाय अनुमिति तत्करणप्रतिबंधकेतिव्यभिचारिणि अव्याप्तिवारणाय तत्करणान्यतरेति ५९

तत्र साध्याभाववद्वृत्तिः साधारणोनैका न्तिकः यथा पर्वतो वन्हिमान्प्रमेयत्वादिति प्रमेयत्वस्य वन्ह्यभाववति ह्रदे विद्यमान त्वात् सर्वसपक्षविपक्षव्यावृत्तोसाधारणः यथा शब्दो नित्यः शब्दत्वादिति शब्दत्वं स वेभ्यो नित्येभ्योनित्येभ्यश्च व्यावृत्तं शब्दमा

टी० तहांपरसाध्यकेअभाववालेमेंरहनेवालाहेतुसाधारण अनेकान्तिककहलाताहै जैसेंपर्वतअग्निवालाहै प्रमेयरूपहो नेसेंक्योंकि प्रमेयत्वरूपहेतुअग्निके अभाववालेजलदहारमें भीरहताहै सर्वसपक्षऔरविपक्षमेंनरहनेवालाअसाधारण कहलाताहै जैसेशब्दनित्यहै शब्दत्ववालाहोनेसेयहांपरशब्द त्वरूपहेतुशब्दमात्रमेंरहनेसे संपूर्णनित्यअनित्यसपक्षऔर विपक्षमें नहीं रहता ६० ॥ ५ ॥

टी० तत्रेतिसाधारणादित्रितयमध्यइत्यर्थः अथ विरुद्धे तिप्रसक्तिरितिमास्मदर्थः सपक्षवृत्तित्वस्यापिनिवेशात् अथैवमपिस्वरूपासिद्धे दूषणंजागर्तीतिभावेहगर्वपक्ष वन्नित्वस्यापितथात्वात् पक्षमात्रेतिसर्वेयेसपक्षाविपक्षा स्तेभ्योव्यावर्तत इतिविपक्षसपक्षव्यावृत्तः केवलव्यतिरे किवारणायतद्भिन्नइत्यपिदेयं ६०

अन्वयव्यतिरेकदृष्टान्तरहितोनुपसंहारी

यथा सर्वमनित्यं प्रमेयत्वादिति अत्र सर्वस्यापि पक्षत्वाद्दृष्टान्तो नास्ति साध्याभावव्याप्योहेतुर्विरुद्धः यथा शब्दो नित्यः कृतकत्वादिति कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम् ६१ ॥

टी० अन्वयऔरव्यतिरेकदृष्टान्तसेहीनअनुपसंहारीहोताहै जैसेसबअनित्यहै प्रमेयरूपहोनेसेयहांपरसबकोपक्षहोनेसेदृष्टान्तनहींमिलताहै साध्यकेअभावसेसंयुक्तहेतुविरुद्धकहलाताहै जैसेशब्दनित्यहैकृतकत्वयानिकार्यरूपहोनेसेयहांपरकृतकत्वरूपहेतुनित्यपनेकेअभावअनित्यपनेसेव्याप्तयानेसंयुक्तहै ६१॥

टी० अन्वयेतिकेवलान्वयिन्यतिव्याप्तिवारणायअन्वयेतिकेवलव्यतिरेकिवारणायव्यतिरेकेतिअत्रेतिउपदर्शितानुमानेइत्यर्थः विरुद्धंलक्षयति साध्येति सद्धेतुवारणायसाध्याभावव्याप्तइतिसत्प्रतिपक्षवारणायसत्प्रतिपक्षभिन्नइत्यपिबोध्यं कृतेतिकार्यत्वादित्यर्थः कृतकत्वमितिअनित्यत्वेनव्याप्तमितियद्यत् कृतकं तत्तदनित्यमितिव्याप्तिर्भवत्येवनत्वेतिभावः ६१

साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्षः यथाशब्दो नित्यः श्रावणत्वाच्छब्दत्ववदिति शब्दोनित्यः कार्यत्वाद्घ

टी० साध्यकेअभावकोसिद्धजानेसावितकरनेवालादूसराहेतुजिसकावैरीकीतौरपरमौजूदहोवै वहसत्प्रतिपक्षकहलाताहै जैसेशब्दनित्यहैश्रावण अर्थात् श्रोत्रइन्द्रियकाविषयहोनेसेशब्दत्वकेतौरपर औरशब्दअनित्यहैकार्यहोनेसेघटके

तौरपरयहांपरशब्दमेंनित्यत्ता औरअनित्यतारूपसाध्यके अभावकोसाबितकरनेहारा श्रावणत्व और कार्यत्वहेतु आपुसमें सत्प्रतिपक्षहोनेहैं ६२

टी० सत्प्रतिपक्षंलक्षयति साध्येतियस्येतियस्य हेतोः साध्याऽभावसाधकं साध्याभावस्यानुमापकं हेत्वंतरं प्रतिपक्षहेतुः विद्यते स सत्प्रतिपक्ष इत्यर्थः अयमेव प्रकरणसम इत्युच्यते विरुद्धवारणाय हेत्वंतरं यस्येति वन्ह्यादि साध्यवारणाय साध्याऽभावेति ६२

असिद्धस्त्रिविधः आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति आश्रयासिद्धो यथा गगनारविन्दं सुरभ्यरविन्दत्वात् सरोजारविन्दवत् अत्र गगनारविन्दमाश्रयः स च नास्त्येव ६३ ॥

टी० असिद्धभी तीन प्रकारका है १ आश्रयसें असिद्ध १ स्वरूपसें असिद्ध २ व्याप्यत्वसें असिद्ध ३ आश्रयसें असिद्ध वह कहलाता है कि जिसका आश्रय गलत हो जैसे कि गगनका कमल सुगंधवाला है कमल होनेसे तलावके कमलकी नांई यहांपर आकाशका कमल आश्रय है सो नहीं है इसलिये अरविंदत्व रूपहेतु आश्रयसे असिद्ध है ६३

टी० असिद्धं विभजते असिद्धइति आश्रयासिद्धाद्यन्यतमत्वमसिद्धत्वं आश्रयासिद्धत्वं च पक्षे पक्षतावच्छेदकाभाववत्वं भवति हि अरविंदे गगनीयत्वरूपपक्षतावच्छेदकाभाववत्वं अरविंदत्वरूपपक्षे गगनीयत्वविरहात् ननु किमरविंदे गगनीयत्वविरहो न आह अत्रेति उपदर्शितानुमान इत्यर्थः ६३

स्वरूपासिद्धो यथा शब्दो गुणश्चाक्षुषत्वात् अत्र चाक्षुषत्वं शब्दे नास्ति शब्दस्य श्रावणत्वात् ६४

टी॰ स्वरूपसे असिद्ध हेतु वह कहलाता है जो कि आपही गलत हो जैसे शब्द गुण है चाक्षुत्ववाला अर्थात् नेत्रसे जानने योग्य होनेसे यहां पर चाक्षुषत्वरूप हेतु शब्दमे अपने स्वरूपसे नहीं है क्योंकि वह नेत्रमें जानने योग्य घटादिमें रहता है शब्दमे तो श्रावणत्व रहता है जिसलिये शब्दका श्रवण इन्द्रियसेही प्रत्यक्ष होता है ६४

टी॰ पक्षेति सद्धेतुभावेतिव्याप्तिवारणाय पक्षेति घटादिअभाववारणायहेत्विति सोयं स्वरूपासिद्धः शुद्धासिद्धं भागासिद्धविशेषणासिद्धविशेष्यासिद्धभेदेन चतुर्विधः तत्राद्यस्तूपदर्शितो द्वितीयो यथा उद्भूतरूपादिचतुष्टयं गुणः रूपत्वादित्यत्र रूपत्वहेतोः पक्षैकदेशावृत्तित्वेन तस्य भागे स्वरूपासिद्धत्वं तृतीयो यथा वायुः प्रत्यक्षः रूपवत्त्वे सति स्पर्शवत्त्वादित्यत्र रूपवत्त्वविशेषणस्य वायाववृत्तेस्तद्विशिष्टस्पर्शवत्त्वेपि तथात्वेन तस्य स्वरूपासिद्धत्वं निर्वहति विशेषणाभावे विशिष्टस्याप्यभावात् तुरीयो यथा अत्रैव विशेषणविशेष्यवैपरीत्येन हेतुः तस्य स्वरूपासिद्धत्वन्तु विशेष्याभावप्रयुक्त विशिष्टाभावादिति बोध्यम्॰ ६४

सोपाधिको हेतुर्व्याप्यत्वासिद्धः साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम् ६५

टी॰ और व्याप्यत्वसे असिद्ध वह कहलाता है जो कि उपाधियुक्त होता है साध्यका व्यापक हो साधनका व्यापक न हो सो उपाधी कहलाता है साध्यके साथ एक आश्रयमें रहनेवाला जो अत्यंत अभाव उसका प्रतियोगी न हो सो साध्यका व्यापक कहलाता है और साधनवालेमें रहनेवाला जो अत्यंत अभाव उसका प्रतियोगी सो साधनका अव्यापक कहलाता है ६५

टी० व्याप्यत्वासिद्धं निरूपयति सोपाधिक मिति ननु कोयमुपा धिरत आह साध्येति साधनाव्यापकउपाधिरित्युक्ते शब्दो ऽनित्यः कृतकत्वादित्यत्रसामान्यवत्वे सत्यस्मदादिबाह्येन्द्रियग्रहणार्हत्वमप्युपाधिः स्यात्तदर्थं साध्यव्यापकत्वेत्युक्ते तावत्युक्ते सामान्यवत्वादिना ऽनित्यत्वसाधने कृतकत्वमुपाधिः स्यात्तदर्थं साधनाव्यापक इत्युक्तं उपाधिभेदमादायासंभववारणाय व्यापकत्वशरीरेप्यत्यंतपदं साधनभेदमादाय साधनस्योपाधित्ववारणायाव्यापकशरीरेप्यत्यंतपद मावश्यकं देयं ६५

साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम् पर्वतो धूमवान्वन्हिमत्वादित्यत्रार्द्रेन्धनसंयोग उपाधिः तथाहि यत्र धूमस्तत्रार्द्रेन्धनसंयोग इतिसाध्यव्यापकता यत्रवन्हिस्तत्रार्द्रेन्धनसंयोगोनास्ति अयोगोलके आर्द्रेन्धनसंयोगाभावादिति साधनाव्यापकता एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः सोपाधिकत्वाद्वन्हिमत्त्वं व्याप्यत्वा

टी० जैसेपह पर्वत धूमवालाहै अग्निवालाहोनेसे यहांपरगीलेईंधनकासंयोगउपाधीहै यहांपरधूमहै वहांपरगीलेईंधनका संयोगहै इसलियेवह संयोगरूपउपाधी धूमरूपसाध्यका व्यापकहै औरजहांपरअग्निहै वहांपरगीलेईंधनकासंयोगनहीहै क्योंकि तपेहुयेलोहेकेपिंडमेंगीलेईंधनकाअभावहै इसलियेसाधनकी अव्यापकहै इसरीतिसे साध्यकाव्यापक होनेपरसाधनकाअव्यापकगीलेईंधनकासंयोगउपाधीहोताहै उपाधिसंयुक्त होनेसे अग्निरूपहेतुव्याप्यत्वसे असिद्धहै ६६

टी० उपाधिस्त्रिविधः केवलसाध्यव्यापकः पक्षधर्मावच्छि
न्नसाध्यव्यापकः साधनावच्छिन्नसाध्यव्यापकश्चेति तत्रा
द्यउपदर्शितः एवं क्रत्वंतर्वर्तिनी हिंसाधर्मजनिका हिंसा
त्वात् क्रतुबाह्यहिंसावदित्यत्रनिषिद्धत्वमुपाधिस्तस्ययत्रा
धर्मजनकत्वंतत्रनिषिद्धत्वमितिसाध्यव्यापकतायत्रहिंसा
त्वंतत्रननिषिद्धत्वमितिनिषिद्धत्वमुपाधिसाधनाव्यापकः
क्रतुहिंसायांनिषिद्धत्वस्याभावात् नहिंस्यात्सर्वाभूतानीति
सामान्यवाक्यतः पशुनायजेदित्यादिविशेषवाक्यस्यबली
यस्त्वात् अतोहिंसात्वंनाधर्मजनकत्वप्रयोजकमपितुनि
षिद्धत्वमेवेत्यादिकमपिद्रष्टव्यं द्वितीयोयथावायुः प्रत्यक्षः
प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्वमुपाधिः तस्यय
त्रप्रत्यक्षत्वंतत्रोद्भूतरूपवत्वमितिनकेवलसाध्यव्यापक
त्वंरूपेव्यभिचारात् किंतुद्रव्यत्वलक्षणोयःपक्षधर्मस्तद
वच्छिन्नवहिः प्रत्यक्षत्वंयत्रतत्रोद्भूतरूपवत्वमितिपक्षध
र्मावच्छिन्नसाध्यव्यापकत्वमेवआत्मनिव्यभिचारवारणा
यवहिः पदंयत्रप्रत्यक्षस्पर्शाश्रयत्वंतत्रनोद्भूतरूपवत्वमि
तिसाधनाव्यापकत्वंचवायावुद्भूतरूपविरहात् तृतीयोयथा
प्रागभावोविनाशीजन्यत्वादित्यत्रभावत्वमुपाधिः तस्यय
त्रविनाशित्वंतत्रभावत्वमितिनकेवलसाध्यव्यापकत्वंप्रा
गभावेभावत्वविरहात् किंतुजन्यत्वरूपसाधनावच्छिन्नवि
नाशित्वंयत्रतत्रभावत्वमितिसाधनावच्छिन्नसाध्यव्यापक
त्वमेवयत्रजन्यत्वंतत्रनभावत्वमितिसाधनाव्यापकत्वंध्व
सेभावत्वविरहात् एवंसश्यामोमित्रातनयत्वादित्यत्रशाक
पाकजन्यत्वमुपाधिः श्यामत्वस्यनीलघटेपिसत्वात् नके
वलसाध्यव्यापकं किंतुसाधनावच्छिन्नसाध्यव्यापकत्वमे
वअष्टमेपुत्रेशाकपाकजन्यत्वविरहेणसाधनाव्यापक
त्वंचेत्यादिकमपिद्रष्टव्यं ६६

यस्य साध्याभावः प्रमाणान्तरेण निश्चितःस बाधितः यथा वन्हिरनुष्णो द्रव्यत्वादिति अत्रानुष्णत्वं साध्यं तदभाव उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यते इति बाधितत्वम् उपमितिकरणमुपमानम्· ६७ ॥

टी०जिसहेतुकेसाध्यकाअभावदूसरेकोई प्रमाणसेनिश्चैकियाजायवहहेतुबाधितकहलाताहै जैसेअग्निअनुष्ण अर्थात् गरमनहीहै द्रव्यत्वरूपधर्मवालाहोनेसे यहांपर अनुष्णता याने शीतलतारूपसाध्यअर्थात् सिद्धकरनेकेयोग्यहै उसकाअभावउष्णता अर्थात् तातापनहै सोप्रत्यक्षरूप दूसरे प्रमाण सेग्रहण कियाजाताहै इसलिये द्रव्यत्वरूप हेतुबाधितहै इतिबाधित अनुमानकाव्याख्यानकरचुके ६७॥

टी०यस्येतिसद्धेतुवारणाय प्रमाणांतरेणेतिपक्षादिवारणाय साध्येति इतिपदकृत्यकेऽनुमानखंडः ६७॥

संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिःतत्करणं सादृश्यज्ञानम् अतिदेशवाक्यार्थस्मरणमवान्तरव्यापारः तथाहि गवयशब्दवाच्यमजानन्कुतश्चिदारण्यकपुरुषाद्गोसदृशो गवय इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन्गोसदृशं पिण्डं पश्यति तदनन्तरमसौ गवयशब्दवाच्य इत्युपमितिरुत्पद्यते ६८ ॥

टी०उपमितिज्ञानकाकरणउपमाप्रमाणहोताहै संज्ञाऔरसंज्ञिकेसंबंधकाज्ञानउपमितिकहातीहै संज्ञानामसे औरसंज्ञिनामवालेसेकहतेहैं उसउपमितिज्ञानकाकरणसादृश्यज्ञानहोताहै जैसेकोईपुरुषगवय अर्थात् रोजशब्दकेअर्थकोनजानताहुआकोई एकजंगलीमनुष्यसे सुनाकि गायके समानगवयपदकावाच्यार्थयानेरोजहोताहै फिरदैववससे वनमें प्राप्तहो

सुनेहुयेवाक्यके अर्थकास्मरणकरताहुआ गायकेसमानजा नवरकोदेखतासके अनंतर यहगवयपदकावाच्यार्थहै इ सतरहकाउपमितिज्ञानउत्पन्नहोताहै वाचक शब्दहोताहै औरवाच्यउसकाअर्थहोताहै इतिउपमान समाप्तम् ६६

टी० अवसरसंगतिमभिप्रेत्यानुमानानंतरमुपमानंनिरू यति उपमितीतिउपमितेःकरणमुपमानमित्यर्थःकण्ठाए दिवारणायमितीति प्रत्यक्षादिवारणायउपेतिसंज्ञासंज्ञीति अनुमित्यादिवारणायसंबंधेति संयोगादिवारणायसंज्ञा संज्ञीति अयंगवयपदवाच्यइतिअभिप्रेत्यगवयोगवयप दवाच्यइत्यर्थःतेनगवयांतरेशक्तिग्रहाभावप्रसंगइतिदू षणमपास्ततथाचगोसादृश्यविशिष्टपिंडज्ञानंकरणंअ तिदेशवाक्यार्थस्मरणमवांतरव्यापारःउपमितिफलमि तिसारःतच्चोपमानंत्रिविधंसादृश्यविशिष्टपिण्डज्ञानम साधारणधर्मविशिष्टपिण्डज्ञानंवैधर्म्यविशिष्टपिंडज्ञानं चतत्राद्यमुक्तमेवद्वितीयं यथाखड्गमृगःकीदृगितिपृष्टेना सिकालसदेकशृंगोतिक्रांतगजाकृतिश्चेततज्ज्ञात्वाभ्यःश्रु त्वाकालांतरेताहशंपिंडंपश्यन्नतिदेशवाक्यार्थंस्मरतितद नंतरंखड्गःमृगःखड्गमृगपदवाच्यउपमितिरुत्पद्यते अत्र नासिकालसच्छृंगमेवासाधारणधर्मःतृतीयंयथाउष्ट्रः कीदृगितिपृष्टेऽश्वादिवदसमानएष्टोनहृस्वग्रीवशरीरश्चे तिआप्तोक्तेकालांतरेतत्पिंडदर्शिनाहैधर्म्यविशिष्टपिंड ज्ञानं ततोऽतिदेशवाक्यार्थस्मरणंततउष्ट्रउष्ट्रपदवाच्यइत्यु पमितिरुत्पद्यते इतिपदकृत्यकेउपमानखंडःसमाप्तम् ६६

आप्तवाक्यं शब्दः आप्तस्तु यथार्थवक्तावाक्यं पदसमूहःयथा गामानयेति शक्तं पदम् ६९

टी० आप्तपुरुषकावाक्यशब्दप्रमाणकहाताहै औरयथार्थ

क्तासें आप्तकहतेहैं यथार्थवक्तावहकहाताहै जोकिजैसाअर्थया नेवस्तुहै उसीतरहपरउसेप्रमाणोंसेनिश्चयकरपक्षपातयानेतर फदारीकोछोड़करकहताहै पदोंकासमूहवाक्यकहलाताहै जैसेगायलेआवो इत्यादिशक्तअर्थात् शक्तिकाआश्रयपदकहलाताहै६९

अवसरसंगतिमभिप्रेत्योपमानानंतरंशब्दंनिरूपयतिआप्तेति शब्दइतिशब्दःप्रमाणमित्यर्थः भ्रांतविप्रलंभकयोर्वाक्यस्यशब्दप्रमाणत्ववारणाय आप्तेति ननुकोयमाप्तइत्यतआह आप्तस्त्विति यथार्थवक्तायथाभूताबाधितार्थोपदेष्टाघटादिसमूहवारणायपदेति शक्तमितिनिरूपकत्वासंबंधेनशक्तिविशिष्टमित्यर्थः ६९

अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरेच्छा संकेतः शक्तिः आकांक्षायोग्यता सन्निधि श्च वाक्यार्थज्ञानहेतुः पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकांक्षा. अर्थाबाधो योग्यता पदानामविलम्बेनोच्चा ७०

टी॰ इसपदसेयहअर्थजानना चाहियेइसतरहपरईश्वरकेसंकेतयानेमर्यादाकोशक्तिकहतेहैं आकांक्षायोग्यताऔरसंनिधिवाक्यार्थज्ञानमेहेतुहै एकपदनेदूसरेपदकेविनाअन्वयबोधनकरना आकांक्षाकहातीहैं पदार्थोंकेसंबंधसें अन्वय कहतेहैं पदोंके उच्चारण मेंविलंबनहोनासंनिधि कहलातीहै ॥ ७० ॥

टी॰ अस्मादिति घटपदात् घटरूपोर्थोबोद्धव्यइतिईश्वरेच्छैवशक्तिरित्यर्थः अर्थस्मृत्यनुकूलपदपदार्थसंबंधत्वंतल्लक्षणंशक्तिरिवलक्षणापिपदस्यवृत्तिः अथकेयंलक्षणा शक्यसंबंधोलक्षणासाचत्रिधाजहदजहत्जहदजहद भेदात् वर्त्ततेच गंगायांघोषइत्यत्रगंगापदस्यशक्यप्रवाहसंबंधस्तीरेलक्षणाबीजचतात्पर्यानुपपत्तिः अतएव

प्रवाहे घोषतात्पर्यानुपपत्त्या तीरे लक्षणा सेत्स्यति छत्त्रिणो यां तीत्यादौ द्वितीया सोयमश्व इत्यादौ तृतीया असंभववारण यपदस्येति पुनरसंभववारणाय पदात्तरेति अर्थेति आकां क्षावारणाय अर्थेति पदानामिति असहोच्चारितेषु अति व्याप्तिवारणाय अविलंबेनेति आकांक्षावारणायपदाना मिति आकांक्षादिशून्य वाक्यस्याप्रमाणत्वं निषेधयति ७०

आकांक्षादिरहितं वाक्यं प्रमाणम् यथा गौरश्वः पुरुषो हस्तीति न प्रमाणमाकांक्षाविरहात् अग्निना सिञ्चेदि ति न प्रमाणं योग्यताविरहात् प्रहरे प्रहरे ऽसहोच्चारिता नि गामानयेत्यादिपदानि न प्रमाणं सान्निध्याभावात्

टी० आकांक्षादिरहित वाक्य प्रमाण नहीं होता जैसें गाय घो डा पुरुष हस्ति इत्यादि वाक्य प्रमाण नहीं है क्योंकि आकांक्षाका अभाव है अग्निसें सींचो इत्यादि वाक्य भी प्रमाण नहीं हैं क्योंकि यो ग्यताका अभाव है पहर २ मे कहे गये जो कि गाय ले आओ इत्यादि पद सो प्रमाण नहीं होते इसलिये कि संनिधिका अभाव है ॥ ७१ ॥

टी० तथा चेति आकांक्षादिकं शब्दहेतुरित्युक्ते चेत्यर्थः यथे ति अनाकांक्षाद्युदाहरणं दर्शयति नन्वेतावता शाब्दसामग्री प्रपंचिता प्रमाविभाजक वाक्ये शाब्दस्याप्तिदिष्टत्वेन तत्कुतो न प्रदर्शितमित्यत आह ७१

वाक्यं द्विविधम् वैदिकं लौकिकं च वैदिक मीश्वरोक्तत्वात्सर्वमेव प्रमाणम् लौकिकं त्वाप्तोक्तं प्रमाणम् अन्यद प्रमाणम् वा क्यार्थज्ञानं शाब्दज्ञानम् तत्करणं शब्दः ७२

टी० वाक्य दो प्रकारका है एक वैद्यक दूसरा लौकिक जो वेद में हो वह वैद्यक और जो लोक में हो वह लौकिक वैद्यक तो ईश्वरने कहा है इसलिये संपूर्ण प्रमाण है और लौकिक आप्तपुरुषका कहा हुआ

प्रमाण है सिवाय इसके और सब वाक्य प्रमाण है वाक्य के अर्थ का ज्ञान शाब्दज्ञान कहाता है उसका करण शब्द है इति शब्दप्रमाण यथार्थ अनुभव निरूपण करचुके ७२

टी० वाक्यंहीति शाब्दत्वं च शब्दात् प्रत्येमीत्यनुभवसिद्धा जातिः शाब्दबोधक्रमो यथा चैत्रो ग्रामं गच्छतीत्यत्र ग्रामकर्मक गमनानुकूलवर्त्तमानकृतिमानिति शाब्दबोधः द्वितीयायाः कर्मत्वमर्थः धातोर्गमनमनुकूलत्वं च संसर्गमर्यादयाभासते लटो वर्त्तमानत्वमाख्यातस्य कृतिः तत्संबंधः संसर्गमर्यादयाभासते रथो गच्छतीत्यत्र गमनानुकूलव्यापारवान् रथ इति शाब्दबोधः स्नात्वा गच्छतीत्यत्र गमनप्रागभावावच्छिन्नकालीनस्नानकर्त्ता गमनानुकूलवर्त्तमानकृतिमानिति शाब्दबोधः क्त्वाप्रत्ययस्य कर्त्ता पूर्वकालीनत्वं चार्थः एवमन्यत्रापि वाक्यार्थो बोध्यः अयथार्थानुभवं विभजते ७२

अयथार्थानुभवस्त्रिविधः संशयविपर्ययतर्कभेदात् एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यावगाहि ज्ञानं संशयः यथा स्थाणुर्वा पुरुषो वेति ७३

टी० अयथार्थ अनुभव तीन प्रकार का है एक संशय दूसरा विपर्यय अर्थात् उलटा और तीसरा तर्क एक धर्मी अर्थात् आश्रय में विरुद्ध नाना धर्मों का संबंध का ज्ञान संशय होता है जैसे एक वस्तु में यह खंभा अथवा पुरुष है ऐसा ज्ञान होता है इससे संशय कहते हैं ७३

टी० अयथार्थेति संशयं लक्षयति एकस्मिन्निति एकस्मिन्धर्मिणि एकस्मिन्नेव परावर्त्तिनि पदार्थे विरुद्ध अधिकरणायेनानाधर्माः स्थाणुत्वपुरुषत्वादयस्तेषां वैशिष्ट्यसंबंधः तदवगाहि ज्ञानं संशय इत्यर्थः घटपटाविति समूहालंबनज्ञानस्य घटत्वपटत्वरूपविरुद्धनानाधर्मवैशिष्ट्यावगाहित्वादतिप्र

सन्निवारणाय एकस्मिन्निति घटः पृथिवीतिज्ञानस्यैकस्मि
न्धर्मिणि घटे घटत्वपृथिवीत्वरूपनानाधर्मवैशिष्ट्यावगा
हित्वादति प्रसंगवारणाय विरुद्धेति पटत्वविरुद्धघटत्व
वान् घट इति ज्ञानेति प्रसक्तिवारणयनानेति ७३

मिथ्याज्ञानं विपर्ययः यथा शुक्ताविदं
रजतमिति आप्यारोपेण व्यापकारोपस्त
र्कः यथा यदि वन्हिर्न स्यात्तर्हि धूमोपि
न स्यादिति स्मृतिरपि द्विविधा यथार्था
अयथार्था च प्रमाजन्या यथार्था अप्रमा
जन्या अयथार्था ७४ ॥

टी० मिथ्याज्ञान विपर्यय कहाताहै जैसे सीपमें रूपेका ज्ञान
आप्यके आरोपसे आपक का आरोप होना तर्क कहलाताहै जैसे
अग्नि न होगी तो धूम भी न होगा यहां पर व्याप्य अग्निका अभा
व है उसके आरोपसे आपक धूमके अभावका आरोप कि
या जाताहै स्मृति भी दो प्रकारकी है एक यथार्थ दूसरी अय
थार्थ प्रमा रूप ज्ञानके संस्कारसे उत्पन्न यथार्थ दूसरी अ
है और अप्रमाज्ञानके सें अयथार्थ होती है ७४

टी० मिथ्येति यथार्थज्ञानवारणाय मिथ्येति मिथ्यार्थवारणा
य ज्ञानेनेति तर्कं लक्षयति आप्यारोपेति असंभववारणयआ
प्यारोपेति पुनरसंभववारणाय आपकारोप इत्ति अत्र वन्ह्य
भावो आप्यः धूमाभावो व्यापकः यद्यपि तर्कस्य विपर्या
त्मकत्वेन पृथग्विभागोऽनुचितः ७४ ॥

सर्वेषामनुकूलवेदनीयं सुखम्
प्रतिकूलवेदनीयं दुःखम् इच्छा कामः क्रोधो द्वेषः ७५

टी० सबकोई की अनुकूल अर्थात् भलाई के तौर पर अच्छी तरह परजानवे या प्राप्त होवे योग्य सुख कहलाता है और प्रतिकूल अर्थात् बुरी तरह पर जानवे या प्राप्त होवे योग्य दुःख कहलाता है कामना से इच्छा कहते हैं क्रोध से द्वेष ७५

तथापि प्रमाणानुग्राहकत्वात् सउचितइति बोध्यः स्वप्नस्तु पुरीतद्बहिर्देशान्तर्देशयोः संधौ मिद्धानाड्यां वामनसि स्थिते दृष्टविशेषेण धातुदोषेण वा जन्यते स च मानसत्वविपर्ययैतद्भूतः सुखं निरूपयति सर्वेषामिति सर्वात्मनमनुकूलमिति वेद्यं यत्तत्सुखमित्यर्थः अहं सुखीत्यनुभवसिद्धसुखत्वजातिमद्धर्ममात्रासाधारण कारणगुणो वा सुखं शत्रुः दुःखवारणाय सर्वेषामिति प्रतिकूलेति दुःखत्वजातिमद्धर्ममात्रासाधारणकारणगुणो वा दुःखं पदकृत्यं पूर्ववत् इच्छां निरूपयति इच्छेति काम इति पर्यायः इच्छात्वजातीमतीच्छा सा द्विविधा फलेच्छा उपायेच्छा च फलं सुखादिकं उपायो यागादिः द्वेषं निरूपयति क्रोध इति द्वेषीत्यनुभवसिद्धद्वेषत्वजातिमान् द्विष्टसाधनताज्ञानजन्यगुणो वै द्वेषः प्रयत्नं निरूपयति ७५

कृतिः प्रयत्नः विहितकर्मजन्यो धर्मः निषिद्ध कर्मजन्यस्त्वधर्मः बुद्ध्यादयोष्टावात्ममात्र विशेषगुणाः बुद्धीच्छाप्रयत्नाद्विविधाः नित्या अनित्याश्च नित्या ईश्वरस्य अनित्या जीवस्य ७६

टी० और कृति से प्रयत्न कहते हैं विहित अर्थात् वेद में कहे हुये कर्मों से उत्पन्न धर्म कहाता है और निषिद्ध कर्मों से उत्पन्न अधर्म कहाता है बुद्धि आदि आठ आत्मा ही के विशेषगुण कहलाते हैं बुद्धि इच्छा और प्रयत्न यह सब नित्य और अनित्य हैं ईश्वर के नित्य और जीव के अनित्य

टी० कृतिरिति प्रयत्नत्वजातिमान्प्रयत्नः स त्रिविधः प्रवृत्तिनि

वृत्तिजीवनयोनिभेदात् इच्छाजन्यो गुणः प्रवृत्तिः द्वेषजन्यो गुणो निवृत्तिः जीवनादृष्टजन्यो गुणो जीवनयोनिः सच प्राणसंचारकारणं धर्ममाह विहितेति वेदविहितेत्यर्थः बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिकोद्रवः अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः संख्यादिरपरत्वान्तो द्रवो नैमित्तिकस्तथा गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः ॥ अ घ र्मं वारणाय वेदविहितेति यागादिक्रियावारणाय कर्मजन्य इति स च कर्मनाशाज्जलस्पर्शे कीर्तनभोगन त्वज्ञानादिना नश्यति अधर्मलक्षणमाह निषिद्धेति वेदेनेत्यर्थः धर्मवारणाय वेदनिषिद्धेति निषिद्धक्रियावारणाय कर्मजन्य इति स च भोगप्रायश्चित्तादिना नश्यति एतावेवादृष्टाविति कथ्येते वासनाजन्यो वासना च विलक्षणसंस्कारः ७६

संस्कारस्त्रिविधः वेगो भावना स्थितिस्थापकश्चेति वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः अनुभवजन्या स्मृतिहेतुर्भावनात्ममात्रवृत्तिः ७७

टी. संस्कार तीनप्रकारका है वेग भावना स्थितिस्थापक वेग तो पृथ्वी जल तेज वायु और मनमें रहता है अनुभवसें उत्पन्न और स्मृतिका हेतु भावना कहाता है सो आत्माहीमें रहता है ७७

टी. संस्कारं विभजते संस्कारेति सामान्यगुणात्मविशेषगुणोभयवृत्तिगुणत्वव्याप्यजातिमान्संस्कारः घटादिवारणाय गुणत्वव्याप्येति संयोगादिवारणाय आत्मविशेषगुणोभयवृत्तीति ज्ञानादिवारणाय सामान्येति द्वितीयादिपतनासमवायिकारणं वेगः रूपादिवारणाय द्वितीयादिपतनेति कालादिवारणायासमवायीति भावं लक्षयति अनुभवेति आत्मादिवारणाय प्रथमदलं अनुभवध्वंसवारणाय द्वितीयदलं ७७

अन्यथाकृतस्य पुनस्तादवस्थ्यापादकः स्थितिस्था

पकः कटादिपृथिवीवृत्तिः ७८ ॥

टी॰ अन्यथा अर्थात् और तरह से किये हुये का फिर वैसा ही स्थापन करने का हेतु स्थितिस्थापक कहलाता है सो चटाई आदिरूप पृथ्वी में रहता है ७८

टी॰ स्थितिस्थापकमाह अन्यथेति पृथिवीमात्रसमवेतसमवेतमस्करत्वव्याप्यजातिमत्त्वं स्थितिस्थापकत्वं गंधवत्त्वमादाय गंधेतिमाप्तिवारणाय संस्कारत्वव्याप्येतिभावनात्वमादाय भावनावारणाय पृथिवीसमवेतसमवेतेति स्थितिस्थापकरूपान्यतरत्वमादाय रूपवारणाय जातिरिति गुणेति द्रव्यकर्मभिन्नत्वे सतिसामान्यवान् गुणः द्रव्यकर्मणोरतिव्याप्तिवारणाय विशेषणदलं सामान्यादावतिव्याप्तिवारणाय विशेष्यदलं ॥ ७८

चलनात्मकं कर्म ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम् अधोदेशसंयोगहेतुरपक्षेपणम् शरीरस्य सन्निकृष्टसंयोगहेतुराकुञ्चनम् विप्रकृष्टसंयोगहेतुः प्रसारणम् अन्यत्सर्वं गमनं ७९

टी॰ कर्म का लक्षण कहते हैं चलनरूप कर्म होता है और ऊंचे देश में संयोग का हेतु उत्क्षेपण कहलाता है नीचे देश में संयोग का हेतु अपक्षेपण कहाता है शरीर के समीपदेश के संयोग का हेतु आकुंचन कहाता है शरीर के दूर देश के संयोग का हेतु प्रसारण कहलाता है और सब तिरछा चलना चक्कर बांधना आदि सब गमन कहाता है ॥ ७९

टी॰ चलनेति संयोगभिन्नत्वे सति संयोगासमवायिकारणं कर्म हस्तपुस्तकसंयोगवारणाय सत्यंतं घटादिवारणाय विशेष्यदलं ऊर्ध्वेति अपक्षेपणवारणाय ऊर्ध्वेति कालादिवारणायासाधारणेत्यपि बोध्यं अधोदेशेति उत्क्षेपणवारणायाधोदेशेति कालादिवारणायासाधारणेत्यपि देयं शरीरेति प्रसारणादिवा

रणाय शरीरसन्निकृष्टेति कालादिवारणायासाधारणं देयम् विप्रकृष्टेति उत्क्षेपणादिवारणाय विप्रकृष्टेति कालादिवारणायासाधारणमप्यावश्यकं ७९

पृथिव्यादिचतुष्टयमनोमात्रवृत्तिः नित्यमेकमनेकमनुगतं सामान्यं द्रव्यगुणकर्मवृत्ति तद्द्विविधं परापरभेदात् परं सत्ता अपरं जातिर्द्रव्यत्वादिः नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः ८०

टी० अनेक पदार्थोंमें समवाय संबंधसे रहनेवाला नित्य और एक होवे सो सामान्य पदार्थ कहाता है सो द्रव्य गुण और कर्ममें रहता है सबसें पर सामान्य सत्ता है अपर सामान्य द्रव्यत्वादि हैं पर और अपरका अर्थ ऊपर लिख आये हैं नित्य द्रव्यमें रहनेवाले अपने स्वरूपही सें अपने आश्रयका दूसरेसें भेदज्ञानका हेतु विशेष कहाते हैं ८०

टी० नित्यमिति संयोगादिवारणाय नित्यमिति कालादिपरिमाणवारणायानेकेति अनेकानुगतत्वं च समवायेन बोध्यं तेन नात्यंताभावेतिव्याप्तिः नित्यद्रव्यवृत्तय इति घटत्वादिवारणाय नित्यद्रव्यवृत्तय इति आत्मत्व मनस्त्ववारणाय आत्मत्वमनस्त्वभिन्ना इत्यपि बोध्यं ८०

नित्यः सम्बन्धः समवायोऽयुतसिद्धवृत्तिः ययोर्द्वयोर्मध्ये एकमपराश्रितमेवावतिष्ठते तावयुतसिद्धौ अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति अनादिः सान्तः प्रागभाव उत्पत्तेः पूर्वं कार्यस्य ॥ ८१ ॥

टी० नित्य संबंध समवाय कहाता है सो अयुतसिद्धोंमें रहता है जिन दोनोंमेंसें एक दूसरेके आश्रित ही होके स्थित रहैं वह दोनो अयुतसिद्ध कहलाते हैं जैसे अवयव और अवयवी गुण और गुणी क्रिया और क्रियावाला जाति और व्यक्ति विशेष पदार्थ और नित्यद्रव्य हैं अनादि और सान्त अर्थात् उत्पन्न हो नाश होने

वालाप्रागभावकहलाताहै वहकार्यउत्पत्तिकेप्रथमकालमेंरहताहै

टी· नित्यइतिअकाशादिवारणायसंबंधइतिसंयोगवारणायनित्य इतिस्वरूपसंबंधवारणायतद्भिन्नइत्यपिबोध्यंप्रागभावंलक्षय ति अनादिरिति घटादिवारणायप्रथमदलंपरमाणुवारणाय द्वितीयदलंप्रनाप्रागभावःकस्मिन्कालेस्तीत्यतआह उत्पत्तेरिति कार्यस्योत्पत्तेः प्राक्स्वप्रतियोगिसमवायिकारणेवर्ततेइत्यर्थः

ध्वंसंलक्षयति ८१

सादिरनन्तः प्रध्वंस उत्पत्त्यनन्तरं कार्य्य स्य त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिता कोत्यन्ताभावःयथा भूतले घटो नास्तीति ८२

टी॰ सादिअर्थात् उत्पत्तिवाला अनंत अर्थात् अविनाशीप्रध्वं सकहलाताहै सोकार्यकीउत्पत्तिकेपीछेकेकालमेहोताहै भूत भविष्य वर्त्तमान इनतीनोकालमेंरहनेवालेसंबंधसें संयुक्तहैप्र तियोगित्ताजिसकीसोअत्यंताभावकहलाताहैजिसवस्तुकाअ भावकहाजाताहैवहवस्तुउसअभावकाप्रतियोगीकहलाताहै उसमेंप्रतियोगितारूपएकधर्मविशेषरहताहै जैसेघटमेंघट त्वपटमेंपटत्वइत्यादिसोवहअत्यन्तअभावनिरूपितप्रतियोगि तात्रैकालिकसंसर्गअर्थात् संबंधयुक्तहोतीहै जैसेवायुमेंरूप काअत्यंतअभावहै उसअभावनिरूपितप्रतियोगितारूपमें होतीहै सोत्रैकालिकसंसर्गसंयुक्तहै क्योंकिवायुमेंरूपकभीन हीं रहताहै औरअत्यन्तभावकीप्रतीतीइसतरहपरहोतीहै जैसेभूतलमेंघटनहीहै वायुमेरूपनहीहैअग्निमेंरसनहीहै

टी· सादिरितिघटादिवारणायानंतइति आत्मादिवारणायसा दिरिति उत्पत्तीतिकार्यस्योत्पत्त्यनंतरंस्वप्रतियोगिसमवायिका रणेवर्ततिरित्यर्थः सचध्वस्तइतिप्रत्ययविषयः अत्यंताभावंलक्ष

यतित्रैकालिकेति त्रैकालिकत्वे सति संसर्गावच्छिन्नप्रतियोगि
ताकोऽत्यन्ताभावः ध्वंसप्रागभाववारणाय त्रैकालिकेति भेदवारणा
य संसर्गेत्यादि घटवति भूतले घटाभावस्य सत्वेपि सामग्र्यभावान्नत्व
तीत्यभावः सा च सामग्री भूतलघटसंयोगप्रागभावध्वंसान्यतरत्व
ताहृशप्रतीतिकालीनभूतलादिकमिति वा ८२

तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिता
कोऽन्योन्याभावः यथा घटः पटो न भवतीति
सर्वेषां पदार्थानां यथायथमुक्तेष्वन्तर्भावा
त्सप्तैव पदार्था इति सिद्धम्· ८३

टी· तादात्म्यसंबंधसंयुक्तप्रतियोगिता है जिसकी सो अन्योन्याभा
व कहाता है इस अभावकी प्रतीति इस तरह पर होती हैं जैसें घट
जो है सो पट नहीं है और घटसें पट भिन्न है तादात्म्य वस्तुका स्वरूप
कहाता है संपूर्ण पदार्थोंका यथायोग्य कहे हुये सातों पदार्थों में ८३
अन्तर्भाव होनेसें सात ही पदार्थ हैं अधिक नहीं यह बात सिद्ध भई

टी· अन्योऽन्याभावं लक्षयति तादात्म्येति प्रागभावप्रध्वंसाभाववा
रणाय तादात्म्येति अत्यन्ताभाववारणाय तादात्म्यत्वेन तादात्म्यसंबं
धो विशेषणीयः ८३

कणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये॥
अन्नंभट्टेन विदुषा रचितस्तर्कसंग्रहः ८४
इति अन्नंभट्टविरचितस्तर्कसंग्रहः सम्पूर्णः

टी· तहां पर अन्नंभट्ट कहते हैं कि कणाद अर्थात् वैशेषिक और न्याय
इन दोनों मतमें बालकोंके प्रवेशके लिये हमने इस तर्कसंग्रह ग्रंथ
की रचना करी सर्वज्ञाय नमः इति श्रीमत्परमहंसपरिव्राजका
चार्य श्री स्वामी ईश्वरस्वरूपानंद भारती पूज्यपादशिष्य श्री स्वामी
माधवस्वरूपानंद भारती विरचिता तर्कसंग्रह भाषाटीका सुबोधनी

॥श्री॥

दाऊजीअग्निहोत्री के सिद्ध विनायक यन्त्रालय में सर्व शास्त्रों के ग्रंथ हैं और बंबई कलकत्ता बनारस इलाहाबाद लखनऊ मथुरा आगरा आदि नगरों की छपी हुई पुस्तकें मिलती हैं जिन लोगों को चाहिये -॥ का टिकट भेजकर सूची पत्र मंगा कर देखें

| पुस्तकें बंबई की | दाम |
| --- | --- |
| महा भारत | ५०) |
| भागवत मोटे अक्षर की | १५) |
| भागवत महीन अक्षर की | १०) |
| हरिवंश | ६) |
| काशी खंड | ७) |

और अनेक प्रकार
की पुस्तकें
हैं

